कुर्यादेकमंडपे" इति । एषां समूलत्वे देशकालसंकटे सति बोद्धव्यम् । उक्तं च । "एकोदरयोर्द्वयोरेकदिनोद्वाहने भवेन्नाशः । नयंतर एवैके दिनेऽप्याहुः
संकटे च शुभम् । न प्रतिषिद्धं लग्नं संप्राप्ते संकटे महति । एकोदरसंभवयोरेकाहे भिन्नमंडपे काले" इति । न चेति सहजयोः सोदरयोर्भ्रात्रोः सहोदरक-
न्यके न देये नोद्वाह्ये। नारदः। "न चैकजन्मनोः पुंसोरेकजन्ये तु कन्यके । नूनं कदाचिदुद्वाह्ये नैकदा मुंडनद्वयम्" इति । अत्र चकारोऽनुक्तसमुच्चयार्थ-
स्तेनैकस्मै वराय सहोदरकन्याद्वयमपि न देयम् । "न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन" इति वसिष्ठोक्तेः । न सहजसुतोद्वाहोऽब्दार्धं इति सुतश्च सुतश्च
सुतौ सुता च सुता च सुते सरूपाणामेकशेष इत्येकशेषः।सुता च सुतश्च सुतौ च पुमान् स्त्रियेत्येकशेषः।सुतौ च सुता च सुते च सुतो वेति सुताः इति कृ-
तैकशेषेण द्वंद्वे पुमान् स्त्रियेत्येकशेषः । सहजाश्च ते सुताश्चेति कर्मधारयः । तेषां सोदरभ्रातॄणां विवाहःअब्दार्धे षण्मासमध्ये न कार्यः । उद्वाह इत्युपल-
क्षणम् । ततश्चैकमातृजयोः पुत्रयोः कन्ययोर्वा पुत्रकन्ययोर्वा समानसंस्कारो न कार्य इत्यर्थः।वृद्धमनुः । "एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।न समानां
क्रियां कुर्यान्मातृभेदे विधीयते॥" समानक्रिया मुंडनादिका । भिन्नमातृजयोः समानक्रियायां न दोषः । नारदः ।"समानापि क्रिया कार्या मातृभेदे तथैव
च । विवाहो दुहितुः कार्यो न विवाहश्चतुर्दिनम्" इति । भिन्नमातुर्दुहितुर्विवाहः समानक्रियायां यदि दिनचतुष्टयमध्ये न कार्य इत्यर्थः। वसिष्ठेन वि-
शेष उक्तः । " एकोदरप्रसूतानां नात्र कार्यत्रयं भवेत् । भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत्" इति। चौलोपनयनविवाहरूपं कार्यत्रयम् । "आदौ
चौलं ततो मौंजी विवाहश्च शुभप्रदः । मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचित्॥" एवं सति भिन्नोदरमंगलमावश्यकत्वे गृहभेदात् एकगृहे आचार्यभे-
दाद्वा कार्यम् । वसिष्ठः । " द्विशोभनं त्वेकगृहे न चेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु । आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्यविभेदतो वा" इति ।
यमलजातयोस्त्वयमपि निषेधो नास्ति । " एकस्मिन्वत्सरे चैव वासरे मंडपे तथा । कर्तव्यं मंगलं स्वस्त्रोर्भ्रात्रोर्यमलजातयोः ॥ " तत्रापि ज्येष्ठानुक्रमेण

कार्यम् । ज्येष्ठानुक्रमस्तु गर्भोत्पत्तिक्रमेण। तथा च भागवते तृतीयस्कंधे हिरण्याक्षहिरण्यकशिपूत्पत्तौ । "प्रजापतिर्नाम तयोरकार्षीद्यः प्राक् स्वदेहाद्यमयोरजायत। तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः॥" तथा वैद्यके आत्रेयसंहितायाम् । "यदा विशेद्द्विधाभूतं बीजं पुष्पे परिक्षरत्। तदा भवेद्द्विधा गर्भः सूतिर्वेशविपर्ययात् ॥" तेन प्रथमं जातः कनिष्ठः अनंतरं जातो ज्येष्ठः।अत एव । "यमयोश्चैव गर्भे तु जन्मतो ज्येष्ठता मता" इति। मनुना गर्भे जन्मत इत्युक्तं "जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्" इति तु मनुवचनमेककोशजातयमलविषयम्। तथा च देवलः । "यस्य जातस्य यमयोः पश्यंति प्रथमं मुखम्। संतानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्" इति । संतानो वंशः यदा तु पुंसो बलातिशयाद्रेतसो द्विधा पातस्तदा कोशद्वये यमलोत्पत्तिः । यदा तु गर्भवायुना एकस्मिन्नेव कोशे रेतसो द्वैधीभावस्तदा एककोशे एव युगपद्यमलं जन्यते । ननु स्त्रीणां विवाह उपनयनस्थान इति

वध्वा वरस्यापि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम् ॥ मासोत्तरं तत्र विवाह इष्यते शांत्याथवा सूतकनिर्गमे परैः ॥१७॥

स्मृतेः कन्याविवाहस्य पुत्रोपनयनस्य च समानत्वमिति चेन्न । अष्टवर्षं ब्राह्मणमुपनयेदिति वचने ब्राह्मणग्रहणात् स्त्रीशूद्राणां व्रतबंधनिषेधाच्च । यत्तु स्त्रीणां विवाह उपयनस्थान इत्युक्तं तत्तासां द्विजत्वसिद्ध्यर्थं । अतः स्त्रीविवाहे विवाह एव न तूपनयनम् । तस्मात्सोदरकन्यापुत्रयोर्विवाहोपनयनयोः समानसंस्कारत्वाभावात् षण्मासमध्येऽपि ते कार्ये । शुभे इति । शुभे विवाहादिमंगलकृत्ये पितृक्रिया श्राद्धक्रिया न कार्या "मंगलेनाप्यमंगलम्" इति नारदोक्तेः । अमंगलं श्राद्धम् । समाप्ते एव मंगले कार्यं न मध्ये इत्यर्थः ॥ १६ ॥ अथ प्रतिकूलनिर्णयमिंद्रवज्रयाह—वध्वा वरस्येति ॥ निश्चयोत्तरं वाग्दानानंतरं यदि वध्वाः कन्यायाः वरस्य वा कुले वंशे त्रिपूरुषे पुरुषत्रयमध्ये कश्चन सपिंडो नाशं प्राप्नुयात् तत्र

मासोत्तरं मरणदिनादारभ्य त्रिंशद्दिनं प्रतिकूलं ततः शांत्या स्वनुष्ठितया विवाहः सुखेन इष्यते । इदं पित्रादिभिन्नविषयम् । मांडव्यः। "अन्येषां तु सपिंडानामाशौचं माससंमितम् । तदंते शांतिकं कृत्वा ततो लग्नं विधीयते।" पित्रादिमरणे तु विशेषः । "वरवध्वोः पिता माता पितृव्यश्च सहोदरः। एतेषां प्रतिकूलं चेन्महाविघ्नकरं भवेत् ॥ पिता मातामहश्चैव माता वापि पितामही । पितृव्यः स्त्री सुतो भ्राता भगिनी वा विवाहिता ॥ एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् । वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत्॥पितुराशौचमब्दं स्यात्तदर्धं मातुरेव हि । मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥" अन्यच्च ।"प्रतिकूले सपिंडस्य मासमेकं विवर्जयेत् । विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥ दुर्भिक्षे राष्ट्रभंगे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां प्रतिकूलं न दुष्यति ॥ दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासवर्तिनश्चैव प्रति-

चूडाव्रतं चापि विवाहतो व्रताच्चूडा च नेष्टा पुरुषत्रयांतरे ॥ वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतो वाब्दविभेदतः शुभः ॥ १८ ॥

कूलं न विद्यते ॥ संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शांतिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥"अथावश्यकत्वेऽपवादमाह । अथवेति। आशौचनिर्गमे शांत्या स्वनुष्ठितया विवाहः परैराचार्यैः इष्यते । ज्योतिः प्रकाशे । "प्रतिकूलेऽपि कर्तव्यो विवाहो मासमंतरा । शांतिं विधाय गां दत्त्वा वाग्दानादि चरेद्बुधः" ॥ १७ ॥ अथान्यदपि विशेषांतरमुपजात्याह—चूडाव्रतमिति ॥ अपिशब्दात्समावर्तनादि चौलमुपनयनं समावर्तनं च विवाहानंतरं पुरुषत्रयमध्य एव नेष्टम् । तथा व्रतादुपनयनात् चूडा च पुरुषत्रयपर्यंतं नेष्टा तथा वध्वाः स्नुषायाः प्रवेशात्सुताया विनिर्गमोऽपि पुरुषत्रयपर्यंतमेव नेष्टः । मेधातिथिः । "पुरुषत्रयपर्यंतं प्रतिकूले स्वगोत्रिणाम् । प्रवेशान्निर्गमस्तद्वत्तथा मुंडनमंडने" इति तस्मान्मूलपुरुषस्य चतुर्थत्वे नार्य

दोषः । स चायं दोषः पुरुषत्रयेऽपि षण्मासपर्यंतमेव । अत एव षण्मासत इति । मासषट्कानंतरं परतोऽपि विवाहादिः शुभः । एतन्मूलवाक्यं कुले ऋतुत्रयादर्वागित्यादिना प्रागुक्तम् अत्रापवाद उच्यते । वेति । अथवा । अब्दभेदात् वर्षभेदात् षण्मासमध्येऽपि शुभः । यथा माघे विवाहो वैशाखे चौलं यज्ञोपवीतं वा भवतीत्यर्थः । संहितासारावल्याम् । "फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलंघनम्" इति ॥ १८ ॥ अथ मूलाद्यनिष्टनक्षत्रोत्पन्नयोर्वधूवरयोःश्वशुरादिपीडकत्वंवसंततिलकयाह—श्वश्रूविनाशमिति ॥ अहिजौ आश्लेषानक्षत्रोत्पन्नौ कन्यापुत्रौ श्वश्वाः साक्षाद्वरस्य मातुः कन्याया वा साक्षान्मातुः विनाशं विधत्तः कुरुतः । तथा निर्ऋतिजौ मूलोत्पन्नौ श्वशुरं हतः नाशयतः । "जनकं जननीं हंति भर्तुर्मू-

श्वश्रूविनाशमहिजौ सुतरां विधत्तः कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ॥ ज्येष्ठाभजाततनया स्वधवाग्रजं च शक्राग्निजा भवति देवरनाशकर्त्री ॥ १९॥ द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा ॥ मूलांत्यपादसार्पाद्यपादजाते तयोः शुभे ॥ २० ॥

लाहिधिष्ण्यजा" इति वसिष्ठोक्तेः । तुल्यन्यायत्वात्कन्याया अपि साक्षान्मातरम्। ज्येष्ठेति। ज्येष्ठानक्षत्रोत्पन्ना कन्या स्वधवाग्रजं भर्तुर्ज्येष्ठभ्रातरं हंति शक्राग्निजा विशाखोत्पन्ना देवरस्य भर्तुः कनिष्ठभ्रातुर्नाशकर्त्री । उक्तं च । "ऐंद्री पत्यग्रजं हंति देवरं तु द्विदैवजा" इति ॥ १९ ॥ एतदपवादमनुष्टुभाह— द्वीशाद्येति॥स्पष्टार्थम्। "न हंति देवरं कन्या तुलामिश्रद्विदैवजा।तदंतपादजा त्याज्या दुष्टा वृश्चिकपुच्छवत्" इति वृद्धनारदोक्तेः । मूलेति। मूलचतुर्थच- रणोत्पन्नौ कन्यासुतौ श्वशुरसौख्यदौ आश्लेषाप्रथमचरणोत्पन्नौ च श्वश्र्वाः । नारदः। "सुतःसुता वा नियतं श्वशुरं हंति मूलजौ।तदंत्यपादजौ नैव तथाश्लेषा- द्यपादजौ" इति पुंस्त्वमविवक्षितम् । ज्योतिर्निबंधे मौंजीबंधनानंतरं मूलाश्लेषादोषो नास्तीत्युक्तम्। "मूलव्यालोद्भवो दोषः पुंसां मौंज्यां विनश्यति" इति



भूपालवल्लभवचनादिति तन्न । मूलाश्लेषादोषः शूद्रविषयः पर्यवस्यति।तथा ज्येष्ठोत्पन्नः पुमान्पत्न्यग्रजमग्रजां वा हंति विशाखोत्पन्नश्च पत्न्यनुजमनुजां वा हंति । उक्तं च कलत्रपटले। "पत्यग्रजामग्रजं वा हंति ज्येष्ठर्क्षजः पुमान्।तथा भार्यानुजां चैवानुजं हंति द्विदैवजः" इत्युक्तम् । तत्परिहारश्च तत्रैव । "मूलांत्यपादजौ श्रेष्ठौ तथाश्लेषाद्यपादजौ । द्वीशांत्यपादजौ दुष्टौ तद्वज्ज्येष्ठांत्यपादजौ" इति । ज्येष्ठाविशाखोत्पन्नपुंसः दोषतत्परिहारनिरूपणं ग्रंथेऽष्वदृष्टत्वादुपेक्ष्यम् ॥ २० ॥ अथाष्टकूटानां नामान्यनुष्टुभाह–वर्ण इति ॥ एते वर्णादिमैत्र्यां सत्यां गुणाधिका एकादिगुणाधिकाः स्युः । यथा वर्णमैत्र्यामेको गुणः वश्ये द्वावित्यादि॥ २१ ॥तत्रादौ वर्णकूटं प्रमाणिकयाह–द्विजा इति ॥ मीनकर्कटवृश्चिका द्विजाः ब्राह्मणाः । ततोऽनंतरमन्ये

वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् ॥ गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः ॥ २१ ॥ द्विजाझषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः ॥वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः ॥ २२ ॥ हित्वा मृगेंद्रं नरराशिवश्याः सर्वे तथैषां जलजास्तु भक्ष्याः ॥ सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत् ॥ २३ ॥

मेषसिंहधनुराशयो नृपाः क्षत्रियाः । वृषकन्यामकरा विशो वैश्याः । मिथुनतुलाकुंभा अंघ्रिजाः शूद्राः। तत्र वरवधूराश्योर्वर्णौ ज्ञात्वा वरस्य वर्णतो ब्राह्मणादिका वधूरधिका ज्येष्ठवर्णा बुधैर्न शस्यते। किंतु समा हीना वा शस्यत इत्यर्थः । "एको गुणः सदृग्वर्णे तथावर्णोत्तमे वरे।हीनवर्णे वरे शून्यं केप्याहुः सदृशे दलम्"इति ॥ २२ ॥ अथ वश्यकूटमिंद्रवज्रयाह–हित्वेति ॥ नरराशयो मिथुनकन्यातुला एषां मेषादयः सर्वेऽपि सिंहं त्यक्त्वा वश्याः । ननु जलचराणां सहानवस्थानात् कथं वश्यत्वं तत्राह । जलजास्तु भक्ष्या इति । एषां नरराशीनां जलजाः मकरकुंभमीनकर्कास्तु भक्ष्याः किंपुनर्वश्या इति

सूचयितुं तुशब्दः । सिंहस्यालिं वृश्चिकं विना सर्वे वश्याः । अन्यदनुक्तं चतुष्पदानां जलचराणां वश्यावश्यं नराणां मनुष्याणां व्यवहारतो ज्ञेयम्।वश्यकूटं वश्यभक्ष्यवैरभेदेन त्रिधा । तत्र वरराशेः स्त्रीराशौ वश्ये सति गुणद्वयम् । भक्ष्य एको गुणः । वैरे गुणाभावः ॥ २३ ॥ अथ ताराकूटमनुष्टुभाह— कन्यर्क्षादिति ॥ कन्यानक्षत्राद्वरनक्षत्रं यावद्गणयेत् तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत् । ततोऽवशिष्टेऽङ्के नवभिर्भक्ते यदवशिष्टं तच्चेत्त्रिपंचसप्तमितं भवेत्तदाऽसदशुभं स्मृतम् । अन्यथा एकद्विचतुःषडष्टनवमितं चेत्तदा शुभम् । उभयत्रापि त्रिपंचाद्रिमिते शेषे तारामैत्री नास्त्येव अतो गुणाभावः।

कन्यर्क्षाद्वरभं यावत् कन्याभं वरभादपि ॥ गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम् ॥२४॥ अश्विन्यंबुपयोर्हयो निगादितः स्वात्यर्कयोः कासरः सिंहो वस्वजपाद्भयोः समुदितो याम्यांत्ययोः कुंजरः ॥ मेषो देवपुरोहितानलभयोः कर्णांबुनोर्वानरः स्याद्वैश्वाभिजितोस्तथैव नकुलश्चांद्राब्जयोन्योरहिः ॥ २५ ॥ ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा मार्जारो दितिसार्पयोरथ मघायोन्योस्तथैवोंदुरुः ॥ व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुध्न्यर्क्षयोर्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत् ॥ २६ ॥

एकत्र चेत्तदार्धा मैत्री तदा सार्धैको गुणः उभयत्रापि चेत्त्र्यादिशेषाभावः तदा पूर्णमैत्रीत्यतो गुणत्रयम् ॥ २४ ॥ अथ योनिकूटं शार्दूलविक्रीडितद्वयेनाह— अश्विन्यंबुपयोरिति । ज्येष्ठामैत्रभयोरिति च ॥ अश्विनीशततारकयोर्हयोऽश्वो योनिरुक्तः । एवं स्वातीहस्तयोः कासरो महिषः । "लुलायो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरोक्तेः । कर्णः श्रवणः अंबु पूर्वाषाढा तयोर्वानरो मर्कटः । चांद्रं मृगः अब्जयोनिर्ब्रह्मा तद्भं रोहिणी तयोरहिः सर्पः । कुरंगो हरिणः अनुराधाज्येष्ठयोः । द्वीशभं विशाखाचित्रयोर्व्याघ्रः।बुध्न्यर्क्षं उत्तराभाद्रपदा अर्यमोत्तराफाल्गुनी तयोर्गौर्योनिः।अन्यत्स्प-

ष्टम् । फलमाह । पादगयोरिति । एकस्मिन्पादे चरणे गतयोरुक्तनक्षत्रयोन्योः परस्परं महावैरं भवेत् । यथा । अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासर इति पादः तत्रोक्तयोर्भयोन्योरश्वमहिषयोर्महावैरम् । एवं सिंहहस्तिनोरित्यादि । एतत्फलमाह । अत्रिः । "एकयोनिषु संपत्त्यै दंपत्योः संगमः सदा । भिन्नयोनिषु मध्यः स्यादरिभावो न चेत्तयोः ॥ योनेरथो वैरभावः स तु कार्ये वियोगदः । राशित्रश्यं च यद्यस्ति कारयेन्न तु दोषभाक् ॥" अत्रातिवैरवैरोदासीनमैत्रातिमैत्रक्रमेण गुणविभागः । गोव्याघ्रादीनां अतिवैरं तत्र गुणाभावः । शुनकमार्जारादीनां वैरं तत्रैको गुणः । अश्वमेषादीनामौ-

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषत् ॥ शेषाश्चास्य समाः कुजस्य सुहृदश्चंद्रेज्यसूर्या बुधः शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ ॥ २७ ॥ मित्रे चास्य रिपुः शशी गुरुशनि-क्ष्माजाः समा गीष्पतेर्मित्राण्यर्ककुजेंदवो बुधसितौ शत्रू समः सूर्यजः ॥ मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः ॥ २८ ॥

दास्यं तत्र गुणद्वयम् । गोमेषादीनां मैत्रं तत्र गुणत्रयम् । एकयोनौ अतिमैत्रं तत्र गुणचतुष्टयम् ॥ २५ ॥ २६ ॥ अथ ग्रहमैत्रीं शार्दूलविक्रीडिताभ्यामाह—मित्राणीति । मित्रे चेति ॥ द्युमणेः सूर्यस्य भौमगुरुचंद्राः मित्राणि शुक्रशनी अस्य वैरिणौ अस्य सौम्यो बुधः समः । विधोः चंद्रस्य बुधरवी मित्रे च पुनरस्य विधोर्द्विषत् शत्रुर्नास्ति मंगलगुरुशुक्रशनयः समा एव । अथ भौमस्य गुरुचंद्रसूर्याः मित्राणि बुधः शत्रुः शुक्रशनी समौ । अथ । शशभृत्सूनोः बुधस्य सिताहस्करौ शुक्ररवी मित्रे अस्य बुधस्य शशी शत्रुः गुरुशनिभौमाः समाः । अथ गीष्पतेर्गुरोः सूर्यभौमचंद्राः मित्राणि बुधशुक्रौ

शत्रू सूर्यजः शनिः समः। अथ कवेः शुक्रस्य बुधशनी मित्रे चंद्रसूर्यौ शत्रू कुजगुरू समौ । अथ शनेः शुक्रबुधौ मित्रे रविचंद्रभौमा द्विषो वैरिणः अन्यो गुरुः समः । अत्र गुणविचारः । तत्रैकाधिपतित्वे परस्परमित्रत्वे पंच गुणाः सममित्रत्वे चत्वारः उभयसमत्वे त्रयो गुणाः मित्रवैरे गुणद्वयं समवैरे एको गुणः परस्परं वैरे गुणाभावः॥ २७॥ २८॥ अथ गणकूटं वसंततिलकया शालिन्या चाह—रक्षोनरेति। निजनिजेति।। क्रमतो रक्षोनरामरगणाः पादत्रयेणो-च्यंते। तक्षा चित्रा राधा विशाखा मघादि एतत्पर्यंतं नक्षत्राणि रक्षोगणः पूर्वात्रयमुत्तरात्रयं विधाता रोहिणी यमो भरणी ईश आर्द्रा एतानि भानि नरगणो मनुष्यगणः मैत्रमनुराधा अदितिः पुनर्वसुः इंदुर्मृगः हरिः श्रवणः पौष्णं रेवती मरुत्स्वाती लघूनि अश्विनीपुष्यहस्ताः एतानि नव भान्यमरगणो

रक्षोनरामरगणाः क्रमतो मघाहिवस्विंद्रमूलवरुणानलतक्षराधाः॥ पूर्वोत्तरात्रयविधातृयमेशभानि मैत्रादितींदुहरिपौष्णमरुल्लघूनि ॥ २९ ॥ निजनिजगणमध्ये प्रीतिरत्युत्तमा स्यादमरमनुजयोः सा मध्यमा संप्रदिष्टा ॥ असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुज-विबुधयोः स्याद्वैरमेकांततोऽत्र ॥ ३० ॥

देवगण इति ॥ २९ ॥ निजेति । स्वस्वगणे विद्यमानयोः स्त्रीपुरुषनक्षत्रगणयोरत्युत्तमा प्रीतिः स्यात् । अमरमनुजयोर्देवमनुष्ययोः स्त्रीपुरुषयोःपरस्परं प्रीतिर्मध्यमा स्यात् । असुरमनुजयो राक्षसमनुष्ययोः स्त्रीपुरुषयोर्मृत्युरेव प्रदिष्टः । प्रबलदुर्बलन्यायेन मनुष्यगणस्यैव नाशः । शार्ङ्गीये । "रक्षोगणः पुमान् चेत्स्यात्कन्या भवति मानवी । केपीच्छंति तदोद्वाहं व्यस्तं कोऽपीह नेच्छति ॥ "एतत्तुल्यन्यायाद्देवराक्षसयोरपि द्रष्टव्यम् । अस्याप-वादमाह गर्गः। "रक्षोगणो यदा पुंसां कुमारी नृगणा भवेत् । सद्भकूटं खगप्रीतिर्योनिशुद्धं शुभं तदा" इति । अत्रेयं गुणकल्पना। नरराक्षसयोर्महद्वैरं तत्र गुणा-

भावः देवरक्षसोर्वैरं तत्र गुणाभावः देवमनुष्यत्वे चत्वारः गणैकत्वे षड्गुणाः ॥ ३० ॥ अथ राशिकूटमनुष्टुभाह—मृत्युरिति॥ स्त्रीपुरुषयोः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः। एवं नवात्मजे नवपंचमेऽपत्यानां हानिः। एवं द्विर्द्वादशे निर्धनत्वं दारिद्र्यं स्यात्। अन्यत्र तृतीयैकादशचतुर्थदशमे समसप्तमे वा सति सौख्यकृत्पाणिपीडनं स्यात् ॥ ३१ ॥ अथास्य दुष्टभकूटस्य परिहारं शार्दूलविक्रीडितेनाह—प्रोक्ते इति ॥ स्त्रीपुरुषराश्योर्द्वयोरेकाधिपत्ये सति एकस्वामिकत्वे सति प्रोक्ते दुष्टभकूटे षडष्टकादावपि विवाहः शुभो गदितः । यथा । मेषवृश्चिकयोः तुलावृषभयोर्वा नवपंचमे त्वेकाधिपत्याभावः । द्विर्द्वादशे मकरकुंभयोः अथवा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रेऽपि यदि नाडीनक्षत्रयोः शुद्धिर्वेधो न भवेत्तदापि दुष्टभकूटके विवाहः शुभः । यथा षष्ठाष्टके मीनसिंह-

> मृत्युः षडष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे ॥ द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ॥ ३१ ॥ प्रोक्ते दुष्टभकूटके परि-
> णयस्त्वेकाधिपत्ये शुभोऽथोराशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि॥ अन्यर्क्षैशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा
> ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः ॥ ३२ ॥

राश्योर्नवपंचमे मेषधनुषोर्द्विर्द्वादशे मीनमेषयोरित्यादौ । तथाच वसिष्ठः । “द्विर्द्वादशे वा नवपंचमे वा षट्काष्टके राक्षसयोषितो वा । एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयम्” इति । अन्यच्च । “विषमात्कन्यकाराशेः षष्ठं षष्ठाष्टकं न सत् । समात्षष्ठं शुभं ज्ञेयं विपरीतं न शोभनम् ॥ ” अन्यर्क्षैशपयोरिति । अन्यर्क्षे प्रीतिषट्काष्टकादिभ्योऽन्यराशौ राशिस्वामिनोः परस्परशत्रुत्वे वा सति अंशपयोस्तद्राशिनवांशस्वामिनोर्बलित्वसखिते स्याताम् । बलित्वं च सखिता च प्रथमाद्विवचनांतं पदं। बलित्वं उच्चादिस्थानस्थितत्वेन सबलत्वं सखिता परस्परमैत्री ते उभे चेद्भवतः तथा नाड्यृक्ष





शुद्धौ नाडीनक्षत्रयोर्वेधाभावे सति तथा ताराशुद्धिवशे च सति राशिवशताभावे च राशिवश्यत्वे च सति दुष्टभकूटकेऽपि विवाहः शुभो निरुक्तः। उक्तं च जगन्मोहने वसिष्ठेन । "राशिनाथे विरुद्धेऽपि सबले वंशकाधिपौ। तन्मैत्रेऽपि च कर्तव्यं दंपत्योः सुखमिच्छता" इति । अन्यच्च । तस्मिन्नेव प्रकरणे वसिष्ठवाक्यम्। "राशिनाथे विरुद्धेऽपि मित्रत्वे चांशनाथयोः। विवाहं कारयेद्धीमान् दंपत्योः सौख्यवर्धनम्" इति। अत्रैकस्मिन्नेव प्रकरणे वसिष्ठवाक्ययोरन्यतरवाक्यानर्थक्यापत्तेरुपसंहारन्यायो न प्रवर्तते। तेनावश्यं वाक्यद्वयस्य भिन्नार्थत्वं वाच्यम्। तत्र कस्य कोऽर्थ इति संदेहे न्यूनार्थं द्वितीयं वचनं केवलग्रहवैरापवादकं तुल्यबलत्वात्।अंशनाथसबलत्वाभिधायकं प्रथमवचनमुभयविरोधस्य ग्रहवैरराशिवैररूपस्यापवादकम्। तेन राशिनाथे विरुद्धेपीत्यत्र राशी च नाथौ च एतेषां समाहारो राशिराथं तस्मिन् राशिनाथे।तथा चायमर्थः।राशी विरुद्धौ षट्काष्टकादिना नाथौ विरुद्धौ कयो-

मैत्र्यां राशिस्वामिनोरंशनाथद्वंद्वस्यापि स्याद्गणानां न दोषः॥ खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम्॥ ३३॥

रित्याकांक्षायां ययोः षट्काष्टकादिविचारस्तयोरेव सन्निहितत्वात् ग्रहणम्। तयो राश्योर्नाथौ विरुद्धौ मित्राणि द्युमणेरित्यादिना परस्परं शत्रू स्यातां तद्राशिनवांशस्वामिनोः सबलत्वे मित्रत्वे च समुच्चिते सति विवाहः शुभः। नन्वस्मिन्वाक्ये क्लिष्टव्याख्याने किं मानम्।उच्यते।अंशनाथसबलत्वस्याधिककरणमेव। तच्च युगपदुत्पन्नस्य दोषद्वैविध्यस्य राशिविरोधग्रहविरोधरूपस्य परिहारविरोधरूपमित्यवगम्यते। अस्मिन्नपि पक्षे नाडीशुद्धिस्ताराशुद्धिः राशिवशता चापेक्षितेति॥ ३२॥ अथदुष्टानां गणकूटभकूटग्रहकूटानां परिहारं शालिन्याह--मैत्र्यामिति॥ स्त्रीपुरुषयो राशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशनाथयोर्द्वंद्वस्यापि मैत्र्यां सत्यां दुष्टगणानां दोषो न स्यात्।अत्रिः। "राशीशयोः सुहृद्भावे मित्रत्वे चांशनाथयोः। गणादिदौष्टयेऽप्युद्वाहः

पुत्रपौत्रप्रवर्धनः ॥ "अथ सद्भकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहवैरकृतं दोषं नाशयेत् । एवमेव खेटप्रीतिः ग्रहमैत्री चापि दुष्टं भकूटं षडष्टादिकं नाशयेत्।असद्भकूटे गुणाभावः। भकूटदोषापवादे चत्वारो गुणा इति ॥ ३३ ॥ अथ नाडीकूटं स्रग्धरयाह—ज्येष्ठारौद्रेति ॥ ज्येष्ठा रौद्रमार्द्रा अर्यमोत्तराफाल्गुनी अंभःपतिर्वरुणः शततारका एभ्यो नक्षत्रेभ्यो युगयुगं द्वयं द्वयम् ज्येष्ठा मूलम् उत्तरा हस्तः आर्द्रा पुनर्वसुः शततारा पूर्वाभाद्रपदा दास्रभमश्विनी च।एतन्नक्षत्रनवकंपरस्परमेकनाडीत्युच्यते।पुष्यमृगचित्रानुराधा भरणी धनिष्ठा पूर्वाषाढा पूर्वाफाल्गुनी उत्तराभाद्रपदा एतन्नक्षत्रनवकं मध्यनाडीत्युच्यते।अथ वाय्वग्निव्यालविश्वोडुयुगयुगं वायुः स्वाती तद्युगं द्वयं स्वाती विशाखा अग्निःकृत्तिका रोहिणी व्यालः आश्लेषा मघा विश्वोडुयुगं विश्वे

ज्येष्ठारौद्रार्यमांभः पतिभयुगयुगं दास्रभं चैकनाडी पुष्येंदुत्वाष्ट्रमित्रांतकवसुजलभं योनिबुध्न्ये च मध्या ॥ वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्याद्दंपत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः ॥ ३४ ॥

उत्तराषाढा श्रवणश्च पौष्णभं रेवती एतन्नक्षत्रनवकं अपरा तृतीयैकनाडीत्युच्यते।एतत्फलमाह।दंपत्योः स्त्रीपुंसयोः एकनाड्यां परिणयनमसद्दुष्टफलं स्यात् मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात् । नारदेन तु विशेष उक्तः।"चतुस्त्रिद्व्यंघ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् । वह्निभादिंदुभान्नाडीत्रिचतुःपंचपर्वसु ॥ गणयेत्संख्यया चैकनाड्यां मृत्युर्न संशयः । एकनाडीविवाहश्च गणैः सर्वैः समन्वितः ॥ वर्जनीयः प्रयत्नेन दंपत्योर्निधनं यतः" इति । अमुमर्थं स्पष्टमाह गर्गः । "चतुष्पात्कन्यका ऋक्षं गणयेदश्विभादिकम् ॥ त्रिभं सव्यापसव्येन भिन्नं पर्व शुभावहम्[1] ॥ कन्यकार्भं त्रिपाच्चेत्स्याद्गणयेत्कृत्तिकादिकम् । चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम् ॥ कन्यकर्क्षं[2] द्विपाच्चेत्स्याद्गणयेत्सौम्यभादिकम् । पंचभिस्त्ववरोहे तु पंचमांगुलिव-

१ सुखावहमित्यपि पाठः । २ कन्यकर्क्षमित्यपि पाठः ।



र्जितम् ॥"एतत्फलमप्याह गर्गः। "संश्लिष्टा मध्यनाडी तु पुरुषं हंति वेगतः। संश्लिष्टा पार्श्वनाडी तु कन्यकां हंत्यसंशयम्॥ आसन्ना त्वेकनाडी स्यादासन्नमृतिदायिनी। दूरस्था चैकनाडी स्याद्दूरस्थानिष्टकारिणी" इति। नाडीविचारे चंडेश्वरः। " पृष्ठे मध्ये शुभसमभोगः क्रोडे वनितावित्तवियोगः। मध्ये रेखे भवति विवाहे उभयोर्मरणं वदति वराहः॥ अश्व्यादिनाडीवेधर्क्षे क्रमात्षष्ठद्वितीयकम्। याम्यादितुर्यतुर्यं च कृत्तिकादिद्विषष्ठकम्॥" अन्यच्च। "अर्केंदुजक्षोणितनूजजीवाः केतुः सितो राहुशशांकसौराः। जन्मादिनाडीत्रितये शुभाः स्युः शुभे शुभं स्यादशुभेऽशुभं च॥" तद्यथा। अर्कः १, १०, १९ बुधः २, ११, २० मंगलः ३, १२, २१ बृहस्पतिः ४, १३, २२ केतुः ५, १४, २३ शुक्रः ६, १५, २४ राहुः ७, १६, २५ चंद्रः ८, १७, २६ शनिः ९, १८, २७ शुभग्रहनाडीनक्षत्रे शुभकार्यं कुर्यान्नाशुभग्रहनाडीक्षत्रे इत्यर्थः। "चतुर्नाडी त्वहल्यायां पांचाले पंचनाडिका।

पौष्णेशशाक्राद्रसमूर्यनंदा पूर्वार्धमध्यापरभागयुग्मम्॥ भर्ता प्रियः प्राग्युजि भे स्त्रियाः स्यान्मध्ये द्वयोः प्रेमपरे प्रिया स्त्री ३५

त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः" इति। मनुस्तु। "अहल्यायां चतुर्नाडीसंयोगः कालमृत्युदः। एष योगोऽन्यदेशेषु ह्यपमृत्युफलप्रदः॥ पंचनाडीसमायोगः पांचाले कालदंडदः। इतरत्र समायोगो दुःखदारिद्र्यदोषकृत्॥ त्रिनाड्यां तु समायोगः सर्वत्रानिष्टकारकः" इति। आवश्यकत्वे गुरुः। "दोषापनुत्तये नाड्यां मृत्युंजयजपादिकम्। विधाय ब्राह्मणांश्चैव तर्पयेत्कांचनादिना॥ हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटके। गावोऽन्नवसनं हेम सर्वदोषापहारकम्" इति। अन्यच्च। "षट्काष्टके गोमिथुनं प्रदद्यात्कांस्यं सरूप्यं नवपंचमेऽपि। वस्त्रं प्रदेयं कनकं च शक्त्या द्विर्द्वादशे ब्राह्मणतर्पणं च" इति ३४

अथेंद्रवज्रया पूर्वमध्यापरभागयोगीनि भान्याह—पौष्णेति॥ पौष्णाद्रेवत्याः षड्भम् भानि जात्यभिप्रायमेकवचनम्। पूर्वार्धयोगीनि ज्ञेयानि। आर्द्रा-



द्विद्वादशमध्यभागयोगीनि ज्ञेयानि। ज्येष्ठादीनि नव अपरभागयोगीनि ज्ञेयानि।फलमाह।भर्ता प्रिय इति । अयं भावः । राज्ञामंतःपुरस्थस्त्रीसमागमे गणिकादिसमागमे वा पूर्वार्धयुजि नक्षत्रे सति स्त्रीणां भर्ता प्रियः मध्यभागयुजि भे परस्परं प्रीतिर्भवेत् । परे परभागयुजि भे स्त्री नृणां प्रिया । भवेदिति । एवं वधूवरयोर्नवसमागमेऽपि ज्ञेयमिति रत्नमालाटीकायां महादेवेनोक्तम् ॥ ३५ ॥ अथ प्राच्यसंमतं वर्गकूटमार्ययाह—अकचटेति ॥ अज्वर्गोऽवर्गसंज्ञक कुचुटुतुपु इति पंचवर्गाः एको यवर्गोऽन्यः शवर्गः एवमष्टौ वर्गाः । तत्र अवर्गः खगेशस्य गरुडस्य कवर्गो मार्जारस्य चवर्गः सिंहस्य टवर्गः शुनः तवर्ग सर्पस्य पवर्ग आखोर्मूषकस्य यवर्गोमृगस्य शवर्गोऽवेर्मेषस्य । अत्र निजात् स्वस्मात् पंचमा वैरिणो येषां ते तथोक्ताः । गरुडसर्पयोर्मार्जारमूषकयोः

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् ॥ सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ ॥ ३६ ॥ राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव ॥ नाडीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात् ॥ ३७ ॥

सिंहमृगयोः श्वमेषयोः परस्परं महावैरमित्यर्थः । स्त्रीपुंसयोर्नक्षत्रद्वयं भक्ष्यभक्षकवर्गे चेत्तदा अशुभम्।यदा त्वेकवर्गे तदा शुभम् । एतच्च स्वामिसेवकयोरपि विचार्यम् ॥ ३६ ॥ इदानीं नक्षत्रराश्यैक्ये विशेषं शालिन्याह—राश्यैक्ये चेदिति ॥ द्वयोर्वधूवरयोः एकराशित्वे सति यदि भिन्नमृक्षं स्यात्तदा नाडीदोषो गणानां च दोषो न स्यात् । यथा । शततारा पूर्वाभाद्रपदापादत्रयं च तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत्स्यात्तदापि प्रागुक्तो दोषो न स्यात्।यथा पूर्वाभाद्रपदापादत्रयं चतुर्थचरणश्च । अत्रापि विशेषमाह गर्गः । "एकराशौ पृथग्धिष्ण्ये पुंतारा प्रथमा भवेत्। अतीव शोभना प्रोक्ता स्त्रीतारा चेत्त्वशोभना॥" अथैकराशिनक्षत्रैक्येऽपवादमाह। नक्षत्रैक्य इति।वधूवरयोः राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदस्तदापि शुभं स्यात्

जन्मनक्षत्राज्ञाने उपायमाह । वसिष्ठः । " अज्ञातजन्मनां नृणां नामभे परिकल्पना । तेनैव चिंतयेत्सर्वं राशिकूटादि जन्मवत् ॥ जन्मभं जन्मधिष्ण्येन नामभं नामधिष्ण्यतः।व्यत्ययेन यदा योज्यं दंपत्योर्निधनप्रदम्" इति ॥ ३७ ॥ सेवकादिभस्य स्वाम्यादिभात् पूर्वत्वे विशेषं वसंततिलकयाह—सेव्याधमर्णेति ॥ स्पष्टार्थम् । तथा चोक्तं डामरसंग्रहे।"भामिनीजन्मनक्षत्राद्द्वितीयं पतिजन्मभम् । न शुभं भर्तृनाशाय कथितं ब्रह्मयामले ॥ प्रथमं सेव्यजन्मर्क्षं द्वितीयं सेवकस्य च । न सेवा सुस्थिरा तस्य जलबुद्बुदवत्प्रिये" इति ॥ "ऋणग्राहकजन्मर्क्षं प्रथमं ऋणदस्य भात् । द्वितीयमृणसंबंधो न कर्तव्यः कदाचन ॥ कदाचिद्द्रव्यलोभेन क्रियते नैव लभ्यते । पार्वतीप्राणनाथेन प्रोक्तं डामरसंग्रहे ॥ ग्रामभं प्रथमं यस्य द्वितीयं जन्मभं भवेत् । न ग्राह्यः सर्वथा

सेव्याधमर्णयुवतीनगरादिभं चेत्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात् ॥ सेवाविनाशधननाशनभर्तृनाशग्रामादिसौख्यहृदिदं क्रमशः प्रदिष्टम् ॥ ३८ ॥ कुजशुक्रसौम्यशशिसूर्यचंद्रजाः कविभौमजीवशनिसौरयो गुरुः ॥ इह राशिपाः क्रियमृगास्यतौलिकेंदुभतो नवांशविधिरुच्यते बुधैः ॥ ३९ ॥ समगृहमध्ये शशिरविहोरा ॥ विषमभमध्ये रविशशिनोः सा ॥ ४० ॥

ग्रामो यतः प्राप्यार्थनाशदः" इति ॥ ३८ ॥ अथ राशिस्वामिनो नवांशविधिं च मंजुभाषिण्याह—कुजशुक्रेति ॥ स्पष्टार्थम् । क्रियमृगास्येति । क्रियो मेषः मृगास्य मकरः तौलिकं तुला इंदुभं कर्कः एभ्यो राशिभ्यो बुधैर्नवांशविधिरुच्यते । मेषे मेषादेव वृषे मकरात् मिथुने तुलातः कर्के कर्कादेव एवं सिंहे मेषात् कन्यादिषु मकरादिभ्यः एवमेव धनुरादिष्वपि मेषादिभ्य एव ॥ ३९ ॥ अथ होरां गायत्रीच्छंदोभेदेन शशिवदनावृत्तेनाह—समगृहेति ॥ पंचदशभागमितैकैका होरा । ततः समराशिमध्ये प्रथमा चंद्रस्य द्वितीया सूर्यस्य।विषमराशिमध्ये प्रथमा रवेरपरा चंद्रस्येत्यर्थः ॥ ४० ॥





अथ त्रिंशांशद्रेष्काणान् वसंततिलकयाह-शुक्रेति॥समराशिमध्ये क्रमेण प्रथमतः पंचांशानां शुक्रः स्वामी ततः शैलानां सप्तानां बुधः ततोऽष्टानां गुरुः ततः पंचानां शनिः ततः पंचानां भौमः। विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम्। प्रथमतः पंचानां भौमः ततः पंचानां शनिः ततोऽष्टानां जीवः ततः सप्तांशानां बुधः ततः पंचाशानां शुक्रः अयं त्रिंशांशकसंज्ञः। द्रेष्काणका इति। अस्य प्रमाणं दशांशाः तत्र प्रथमदशांशाः प्रथमो द्रेष्काणः स प्रथमस्य स्वाधीशस्य ततो दशांशाः विंशतिभागपर्यंतं द्वितीयो द्रेष्काणः स स्वराशितः पंचमराशीश्वरस्य ततो विंशतिभागानंतरं दशांशास्तृतीयो द्रेष्काणः स

शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपंचविशिखाः समराशिमध्ये ॥ त्रिंशांशको विषमभे विपरीतमस्माद्द्रेष्काणकाःप्रथमपंचनवाधिपानाम् ॥ ४१ ॥ स्याद्द्वादशांश इह राशित एव गेहं होराथ दृक्कनवमांशकसूर्यभागाः ॥ त्रिंशांशकश्च षडिमे कथितास्तुवर्गाः सौम्यैः शुभं भवति चाशुभमेव पापैः ॥ ४२ ॥

स्वराशेर्नवमाधीश्वरस्य। यथा मेषे प्रथमद्रेष्काणो भौमस्य द्वितीयः सूर्यस्य तृतीयो गुरोरिति॥ ४१ ॥ अथ द्वादशांशं षड्वर्गोपसंहारं च सफलं वसंततिलकयाह-स्याद्द्वादशांश इति ॥ इह षड्वर्गे द्वादशांशः राशितः स्वराशेरेव सार्धभागद्वयात्मको ज्ञेयः। मेषस्य मेषादिः वृषस्य वृषादिरित्यर्थः। गेहं होरादृक्कः नवमांशः द्वादशांशः त्रिंशांशः इमे षड्वर्गाः कथिताः। एते वर्गाः सौम्यग्रहाणां चेद्भवंति तदा शुभं पापानां चेदशुभं मिश्राश्चेदधिकवर्गसदृशं फलम्। अत्र नारदादिभिरेकविंशतिर्महादोषा उक्ताः। यथा "पंचांगशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः। उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः॥

१ द्रेकाणका इत्यपि पाठः।

तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः । गंडांतं कर्तरी रिःफषडष्टेंदुश्च सग्रहः ॥ दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्तो वारदोषः खार्जूरिकसमांघ्रिभम् ॥ ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातवैधृतावेकविंशतिः" इति। अन्यैस्तु दशदोषा उक्ताः।"वेधश्च लत्ता च तथा च पातः खार्जूरयोगं दशयोगचक्रम् । पुनश्च जामित्रमुपग्रहाश्च बाणाख्यवज्रौ दश चैव दोषाः " इति । अत्र ग्रंथकृता लक्षणस्य पृथग्वक्तव्यत्वा-दोषनामानि नोक्तानि । तत्र पंचांगशुद्धिदुर्मुहूर्तवारदोषग्रहणोत्पातनक्षत्रदोषा आद्ये शुभाशुभप्रकरणे निरूपिता एवेति पुनर्नोच्यंते । दुर्मुहूर्तवारदोष-योः पुनरभिधानप्रयोजनं तत्रैव वक्ष्यामः । तत्र पापषड्वर्गाख्यो दोषः कुजशुक्रेत्यादिभिश्चतुर्भिः श्लोकैर्निरूपितः ॥ ४२॥ अथ गंडांतदोषं शार्दूलविक्रीडि-

ज्येष्ठापौष्णभसार्पभांत्यघटिकायुग्मं च मूलाश्विनी पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गंडांतकम् ॥ कर्काल्यंडजभांत-
तोऽर्धघटिका सिंहाश्वमेषादिगा पूर्णांताद्घटिकात्मकं त्वशुभदं नंदातिथेश्चादिमम् ॥ ४३ ॥

तेनाह—ज्येष्ठापौष्णेति ॥ गंडांतं नाम संधिविशेषः स चानेकविधः नक्षत्रतिथिलग्नसंधिः तथा योगकरणवर्षायनर्तुमासपक्षदिनरात्रिमध्याह्नप्रातःसायंनि-शीथसंधिश्चेति । तत्र नक्षत्रतिथिलग्नसंधिर्गंडांतसंज्ञ उच्यते । ज्येष्ठा पौष्णभं रेवती सार्पभमाश्लेषा । एतेषामंत्यघटिकाद्वयं तथा मूलाश्विनीमघानामादौ घटिकाद्वयं तद्भस्य नक्षत्रस्य गंडांतं ज्ञेयम् । यथा । रेवत्यश्विन्योराश्लेषामघयोर्ज्येष्ठामूलयोरंतरालवर्तिघटीचतुष्टयं नक्षत्रगंडांतमशुभदमित्यर्थः । अथ लग्नगंडांतं । कर्केति । कर्कः अलिर्वृश्चिकः अंडजो मीनः । " मीनो वैसारिणोंडजः " इत्यभिधानात् । एषां लग्नानामंततोऽर्धघटिका । सप्तम्यर्थे तसिः । अंतेऽर्धघटिका । तथा सिंहमेषौ प्रसिद्धौ अश्वो धनुः एषां लग्नानां आदिगतार्धघटिका लग्नगंडांतम् । यथा कर्कसिंहयोर्मीनमेषयोर्वृश्चिकधनु-

षोश्चांतरालवर्तिन्येका घटिका लग्नगंडांतमशुभदमित्यर्थः । पूर्णांतादिति । पूर्णाः पंचमी दशमी पंचदश्यस्तासामंतेष टिकैका तथा नंदाः प्रतिपत्षष्ठचेकादश्यः तासामादिगतैका घटिका तिथिगंडांतं नाम । यथा पंचमीषष्ठयोः दशम्येकादश्योः पंचदशीप्रतिपदोः तिथ्योरंतरालवर्ति घटीद्वयं तिथिगंडांतमशुभमित्यर्थः । एवं गंडांतसंज्ञः संधिः । अतोऽन्येऽपि संधयो वसिष्ठेनोक्ताः। "पक्षोऽब्दसंधिस्त्रिदिनं च माससंधिस्त्रिनाड्यः खलु संध्ययोश्च । नाड्यश्चतस्रस्तिथिऋक्षयोगसंधिस्तदर्धं करणस्य संधिः॥ पक्षांते पुत्रनाशः स्यान्मासांते तु धनक्षयः । वर्षांते वर्गनाशः स्यात्करणात्सर्वनाशनम् " इति ॥ आवश्यकत्वे तु । "नक्षत्रयोगतिथिसंधिषु नाडिकैका तिथ्यष्टविंशतिपलैः सहितोभयत्र । कर्कालिमीनतनुसंधिषु दिक्पलानि वर्ज्यानि शेषविवरेषु च पंच पंच " इति । वासनासिद्धं केशवार्कवाक्यमनुसर्तव्यम् । गंडांतपरिहारमाह वसिष्ठः । "गंडांतदोषमखिलं मुहूर्तोभिजिदाह्वयः । हंति यद्वन्मृगं व्याधः

लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तदा ॥ कर्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा ॥ ४४ ॥

पक्षिसंघमिवाखिलम् " इति ॥ ४३ ॥ अथकर्तरीदोषमनुष्टुभाह—लग्नात्पापाविति ॥ यदा पापग्रहौ ऋज्वनृजू लग्नाद्व्ययार्थस्थौ द्वादशस्थ पापग्रहो ऋजुमार्गी द्वितीयस्थः पापोऽनृजुर्वक्री स्यात्तदा कर्तरीनामदोषः स्यात् मृत्युदारिद्र्यशोकदा भवेत् । कर्तरीकारकौ ग्रहौ उभावपि वक्रिणौ शीघ्रगौ वा तदा कर्तरी नेत्याह । वसिष्ठः । "लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्तरी स्यादृजुवक्रगत्योः । तावेव शीघ्रौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः" इति । इयं कर्तरी चंद्रस्यापि द्रष्टव्या । कश्यपः । "चंद्रस्य कर्तरी तद्वच्छुभदृष्टा न दोषदा" इति । परंतु लग्नस्य चंद्रस्य वा क्रूरमध्यगतत्वदोषोऽस्त्येव। कर्तरीतः स्वल्पफलः कन्यानाशकरत्वात् । "क्रूरग्रहमध्यगते लग्ने चंद्रेऽथवा करग्रहणम् । ते यमसदनाभिमुखं गमनं रचेच्छंति कन्यायाः "इति वसि-

श्लोके । कर्तरीदोषापवादमग्रे स्वयमपि वक्ष्यति ॥ ४४ ॥ अथ सग्रहदोषमनुष्टुभाह—चंद्रेति ॥ सूर्ययुक्ते चंद्रे दारिद्र्यं स्यात् । एवं भौमादिषु मरणादिफलं क्रमेण स्यादित्यर्थः । पापद्वययोगे चंद्रस्य मृतिः स्यात् । नारदादिभिर्बुधगुरुराहित्यफलमशुभमुक्तम्। अत्र तु श्रीपतिवाक्यानुरोधात् वसिष्ठेन च केचिन्मते शुभत्वोक्तेश्च शुभमुक्तम् । श्रीपतिः । "शुभं च दंभोलिभृदीज्यविद्भ्याम्" इति । वसिष्ठः । "दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चंद्रे ससापत्न्यकम् । प्रव्रज्यार्कसुतेन सद्ग्रहयुजौ वांछंति केचिच्छुभं ध्याथैर्मृत्युरसद्ग्रहैः शशियुतैर्दीर्घः प्रवासः शुभैः" इति । एतत्परिहारो नारदेनोक्तः । "स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः । युतिदोषाय न भवेद्दंपत्योः श्रेयसे तदा" इति ॥ ४५ ॥ अथाष्टमलग्नदोषं

चंद्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम् ॥ सौख्यं सापत्न्यवैराग्ये पापद्वययुते मृतिः॥४५॥ जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः॥ एकाधिपत्ये राशीशमैत्रे वा नैव दोषकृत् ॥ ४६ ॥ मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत् ॥ अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ॥ ४७ ॥

सापवादमनुष्टुभाह—जन्मलग्नभयोरिति ॥ जन्मलग्नजन्मराशिसंबंधिनि मृत्युराशौ अष्टमराशौ अष्टमलग्ने करग्रहो विवाहो नेष्टः । अत्र जन्मराशौ च विशेषमाह नारदः । "जन्मराश्युद्गमे नैव जन्मलग्नोदयः शुभः। तयोरुपचयस्थानं यदि लग्नगतं शुभम्। अष्टमलग्नापवादमाह। एकेति। जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः तथा तयो राशीश्वरयोर्मैत्रे सति यथा सिंहमीनयोः एतादृशे विषये अष्टमलग्नदोषो न स्यात् ॥ ४६ ॥ अथोत्तरार्धोक्तमेवार्थं स्पष्टमुपजातिकयाह—मीनोक्षेति ॥ उक्षा वृषः स्त्री कन्या एते राशयो यद्यष्टमं लग्नं स्युस्तदाष्टमलग्नदोषकृन्न भवेत् ।

यथा सिंहान्मीन इत्यादि। कुत इत्यत आह। अन्योऽन्येति परिहारांतरमाह गुरुः। "लग्नादष्टमराशीशः केंद्रगः शुभवीक्षितः। यद्यष्टमगतस्योक्तं दोषमाशु व्यपोहति ॥ रंध्रेशः स्वशुभांशस्थस्तुंगस्वक्षेत्रमित्रगः। अष्टमस्थानदोषो हि विनश्यति न संशयः" इति ॥४७॥ अथान्यदपि कुसुमविचित्राच्छंदसाह–मृतीति ॥ अष्टमभवननवांशो यदि लग्ने स्यादथवाष्टमलग्नेशः स्यात्तदा शुभकरो न स्यात् । अथ व्ययभवनं जन्मलग्नजन्मराशिभ्यां द्वादशभवनं अथवा व्ययभवनांशः अथवा तत्स्वामी यदि लग्ने स्यात्तदा कलहकृत्स्यात्। कश्यपः। "दंपत्योरष्टमे लग्ने राशौ वापि तदंशके।

मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात् ॥ व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात्॥४८॥

खरामतों ३० ऽत्यादितिवह्निपित्र्यभे खवेदतः ४० के रदत ३२ श्च सार्पभे॥ खबाणतो ५० श्वे धृतितो १८ऽर्यमांबुपे कृते २० भगत्वाष्ट्रभविश्वजीवभे ॥ ४९ ॥ मनो १४ द्विदैवानिलसौम्यशाक्रभे कुपक्षतः २१ शैवकरेष्टि १६ तोऽजभे ॥ युगाश्वितो २४ बुध्न्यभतोययाम्यभे खचंद्रतो १० मित्रभवासवश्रुतौ ॥ ५० ॥ मूलेंगबाणा ५६ द्विषनाडिकाः कृता वर्ज्याः शुभेऽथो विषनाडिका ध्रुवाः॥ निघ्नाभभोगेन खतर्क ६० भाजिताः स्फुटा भवेयुर्विषनाडिकास्तथा ॥ ५१ ॥

तदीशे वा लग्नगते तयोर्मृत्युर्न संशयः" इति। "तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे। विवाहलग्नगे नैःस्व्यं नित्यः स्यात्कलहो द्वयोः" इति ॥ ४८ ॥ अथ विषघटीदोषं वंशस्थाख्यामिंद्रवज्रया चाह–खरामेति । मनोरिति। मूले इति ॥ रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतस्त्रिंशद्घटिकोत्तरं कृताश्चतस्रो घटिकाः विषनाडिकाः शुभकार्ये वर्ज्याः स्युरिति तृतीयश्लोकेनान्वयः।एवं सर्वत्र व्याख्येयम्। के रोहिण्याम्। अजभे पूर्वाभाद्रपदायाम्।

तदेवं षष्टिघटिकात्मके नक्षत्रभोगे ध्रुवका उक्ताः । न्यूनाधिकत्वे स्पष्टीकरणमाह । अथो इति । विषनाडिका ध्रुवाः खरामत इत्येवमादयः इष्टनक्षत्र-भोगेन निघ्नाः खतर्कैः षष्ट्या भाजिताः तथा विषनाडिका अपि भोगेन निघ्नाः षष्ट्या भाजिताः लब्धाः स्पष्टा भवेयुरित्यर्थः । परिहारमाह गुरुः । " चंद्रो विषघटीदोषं हंति केंद्रत्रिकोणगः । लग्नं विना शुभैर्दृष्टः केंद्रे वा लग्नपस्तथा " इति । " विषनाड्युत्थितं दोषं हंति सौम्यर्क्षगः शशी । मित्रदृष्टोऽथवा स्वीयवर्गस्थो लग्नपोऽपि वा " इति । दैवज्ञमनोहरे तिथिवारविषघटिका उक्ताः । " तिथीषुनागाद्रिगिरीषुवारिधिर्गजाद्रिदिक्पावकदिग्विभाकराः । मुनीभसंख्याः प्रथमात्तिथेः क्रमात्परं विषं स्याद्धटिकाचतुष्टयम् १५, ५, ८, ७, ७, ५, ४, ८, ७, १०, ३, १०, १२, ७, ८ ॥

गिरिशभुजगमित्राः पित्र्यवस्वंबुविश्वेऽभिजिदथ च विधातापींद्र इंद्रानलौ च ॥ निर्ऋतिरुदकनाथोऽप्यर्यमाथो भगः स्युः क्रमश इह मुहूर्ता वासरे बाणचंद्राः॥५२॥ शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ ॥ विष्णवर्कत्वाष्ट्रमरुतो मुहूर्ता निशि कीर्तिताः॥५३॥

नखा द्वयं द्वादश दिक् च शैला बाणाश्व तत्त्वानि यथाक्रमेण । सूर्यादिवारेषु परं चतस्रो नाड्यो विषं स्यात्खलु वर्जनीयम् २०, २, १२, १०, ७, ५, २५" ॥ ४९ ॥ ५० ॥ ५१ ॥ अथ दुर्मुहूर्तदोषं विवक्षुरादौ दिवामुहूर्तान्मालिनीछंदसाह—गिरिशेति ॥ अथ बाणचंद्रा इत्युक्तेर्दुर्मुहूर्तस्य पार्थक्येन लक्षणं नोक्तम्। इंद्रानलौ इंद्राग्नी एते वासरे पंचदश मुहूर्ताः स्युः ॥५२॥ रात्रिमुहूर्तानुष्टुभाह—शिव इति ॥ प्रथममुहूर्तस्वामी शिव एवं अजपादादष्टौ भेशाः नक्षत्रस्वामिनो मुहूर्तेशाः स्युः । यथा अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निः ब्रह्मा सोम इत्यष्टौ ततो दशममुहूर्तोऽदितिः जीवको गुरुः विष्णवर्कत्वाष्ट्रमरुतः प्रसिद्धाः एते सर्वे निशि मुहूर्ताः प्रकीर्तिताः । "अह्नः पंचदशो भागो मुहूर्तोऽथ तथा निशि" इति कश्यपोक्तेः ॥ ५३ ॥



अथ दुर्मुहूर्तान् भुजंगप्रयातेनाह—रवावर्यमेति ॥ रवौ अर्यमा मुहूर्तो निषिद्धः एवं सोमे ब्रह्मरक्षः । द्वंद्वैकत्वम् । ब्रह्मरक्षःस्वामिकौ मुहूर्तौ निषिद्धौ । अन्यत्स्पष्टम् ॥ ५४ ॥ अथ वेधं विवक्षुर्विहितनक्षत्रादिकमभिजिन्मानं च प्रहर्षिण्याह—निर्वेधैरिति ॥ वेधरहितैर्मृगादिनक्षत्रैर्विवाहः शुभः । रिक्तेति । रिक्तामा ४, ९, १४, ३० आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवारे विवाहः शुभः । अभिजिल्लक्षणमाह।अथ वैश्वेति । वैश्वमुत्तराषाढा तस्य प्रांत्यांशश्च-तुर्थचरणः श्रुतेःश्रवणस्य तिथिभागः पंचदशांशो मिलित्वाभिजिद्भोगः स्यात् ॥ ५५ ॥ अथ वेधदोषं पंचशलाकाचक्रोद्धारनिरपेक्षं स्पष्टं शार्दूलविक्रीडिते-

रवावर्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात् ॥ गुरौ तोयरक्षो भृगौ ब्राह्मपित्र्ये शनावीशसार्पौ मुहूर्ता निषिद्धाः ॥५४॥निर्वेधैः शशिकरमूलमैत्रपित्र्यब्राह्मांत्योत्तरपवनैः शुभो विवाहः ॥ रिक्तामारहिततिथौ शुभेऽह्नि वैश्वप्रांत्यांघ्रिः श्रुतितिथिभागतोभिजित्स्यात् ॥ ५५ ॥ वेधोऽन्योन्यमसौ विरिंच्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेंद्वोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः ॥ स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोपांत्ययोः खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः ॥ ५६ ॥

नाह--वेधोऽन्योन्यमिति ॥ विरिंच्यभिजितोः रोहिण्यभिजितोर्ग्रहकृतो वेधोऽन्योन्यं परस्परं भवेत् । रोहिणीस्थे ग्रहेऽभिजिद्विद्धः । अभिजित्स्थे रोहिणी विद्धा । एवं सर्वत्र व्याख्येयम् । चरणेवधमाह । खेट इति । तत्र तस्मिन्नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा परनक्षत्रस्य प्रथमपादस्य वेधः । यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः । एवं यदा द्वितीयपादे तदा तृतीयपादस्य वेधः । यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः । अयं चरणवेधः सौम्यग्रहपर एव । नारदः । "पादमेवं शुभैर्विद्ध मशुभैर्नैव कृत्स्नतः" इति । "क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रांतं च कृत्स्नभम् ।

मणिहेममयं हर्म्यं भूताक्रांतमिव त्यजेत्" इति । श्रीपतिः । "वधूप्रवेशने दाने वरणे पाणिपीडने । वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाकक:" इति । ज्योतिर्निबंधे गर्गः । "मघायाः प्रथमे पादे मूलस्य प्रथमे तथा । रेवत्याश्च चतुर्थेंऽशे विवाहः प्राणनाशनः" इति तद्ग्रंथांतरं ज्ञेयम् ॥ ५६ ॥ अथ विवाहादन्यत्र यज्ञोपवीतादौ कैश्चिद्विवाहेऽपि सप्तशलाकाचक्रवेधो वर्ज्य उक्तस्तदर्थं चक्रन्यासं विनैव सप्तशलाकावेधं शार्दूलविक्रीडितेनाह-शाक्रेज्य इति ॥ कुभृद्रेखिके सप्तशलाकाचक्रे शाक्रेज्ये ज्येष्ठापुष्यनक्षत्रे मिथः परस्परं क्रूराधिष्ठितत्वेन विद्धे ज्ञेये । एवं जलशिवे पूर्वाषाढार्द्रे इत्यादि

शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्क्षे वसुद्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे मिथः ॥ हस्तोपांतिमभे विधातृविधिभे मूलादितित्वाष्ट्रभाजांघ्री याम्यमघे कृशानुहरिभे विद्धे कुभृद्रेखिके ॥ ५७ ॥ ऋक्षाणि क्रूरविद्धानि क्रूरभुक्तादिकानि च ॥ भुक्त्वा चंद्रेण मुक्तानि शुभार्हाणि प्रचक्षते ॥ ५८ ॥

व्याख्येयम् । दीपिकायाम् । "यस्याः शशी सप्तशलाकचक्रे पापैरपापैरथवा विवाहे। उद्वाहवस्त्रेण सुसंवृतांगी श्मशानभूमिं रुदती प्रयाति" इति ॥ ५७ ॥ अथ क्रूराक्रांतादिदोषं सापवादमनुष्टुभाह—ऋक्षाणीति ॥ क्रूरग्रहैर्विद्धानि तथा क्रूरैर्मुक्तानि त्यक्तानि आदिशब्दात्क्रूरयुतानि क्रूरगंतव्यानि चकारात्त्रि-विधोत्पातदूषितानि च नक्षत्राणि तानि यदि चंद्रेण भुक्त्वा मुक्तानि तदा शुभार्हाणि शुभकर्मार्हाणि विवाहादौ योग्यानि बुधाः प्रचक्षते कथयंति ॥ ५८ ॥

अथ लत्तादोषमुपजातिकयाह—ज्ञराह्विति ॥ गावो नव जातयो द्वाविंशतिः शराः पंच एतैर्मितं भं स्वाक्रांतनक्षत्रात् ज्ञराहुपूर्णेंदुसिताः स्वपृष्ठे संलत्तयंते। यथा बुधः सप्तमं राहुर्नवमं राहोः सदा वक्रगत्वान्नवमगणना क्रमेणैव कार्या।यथाश्विन्यां राहुराश्लेषां लत्तयतीति। पूर्णेंदुः पूर्णिमांतचंद्रो द्वाविंशम्। तच्च कृष्णपक्षे पंचम्यादितिथौ संभवति।शुक्रः पंचमं स्वपृष्ठे लत्तयतीत्यर्थः।अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्याष्टतर्काग्निमितं संलत्तयंते । यथा । सूर्यः स्वाक्रांतनक्षत्राद्द्वादशं शनिरष्टमं गुरुः षष्ठं भौमस्तृतीयं नक्षत्रमग्रतो लत्तयंतीत्यर्थः। वराहः। "रविलत्ता वित्तहरी नित्यं कौ जीविनिर्दिशेन्मरणम्।

ज्ञराहुपूर्णेंदुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि ॥ संलत्तयंतेऽर्कशनीज्यभौमाः सूर्याष्टतर्काग्निमितं पुरस्तात् ॥ ५९ ॥ हर्षणवैधृतिसाध्यव्यातिपातकगंडशूलयोगानाम् ॥ अंते यन्नक्षत्रं पातेन निपातितं तत्स्यात् ॥ ६० ॥ पंचास्याजौ गोमृगौ तौलिकुंभौ कन्यामीनौ कर्क्यली चापयुग्मे ॥ तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रांते साम्यं नो शुभं मंगलेषु ॥ ६१ ॥

चांद्री नाशं कुर्याद्बौधी नाशं वदत्येव ॥ सौरी मरणं कथयति बंधुविनाशं बृहस्पतेर्लत्ता। मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदति" इति ॥ ५९ ॥ अथ पातदोषं पथ्यार्ययाह—हर्षणेति ॥ व्यतीपातक इति स्वार्थे कः। हर्षणेत्यादि षड् योगानामंते यच्चंद्रनक्षत्रं भवेत् तत्पातेन चंडीशचंडायुधाख्येन निपातितं स्यात् ॥ ६० ॥ अथ क्रांतिसाम्यापरपर्यायं महापातदोषं शालिन्याह—पंचास्येति ॥ पंचास्याजौ सिंहमेषौ अन्ये प्रसिद्धाः एषु राशियुग्मेषु पाठक्रमेण व्युत्क्रमेणावस्थितयोश्चंद्रभान्वोः क्रांतिसाम्यं निरुक्तं तन्मंगलेषु नो शुभं स्यात्। अनेन क्रांतिसाम्यसंभवमात्रं सूचितम्। तदानयनं

सूर्यसिद्धांताद्रामविनोदाद्वा स्पष्टं ज्ञेयम् ॥ ६१ ॥ अथ खार्जूरदोषं सुबोधमिंद्रवज्रयाह—व्याघातेति ॥ अंत्यो वैधृतिः यस्मिन् दिने व्याघातादिके विरुद्धे दुष्टे योगे सति अर्कादर्कनक्षत्रात् शशी चंद्रोऽभिजित्समेतो विषमे विषमसंख्याके नक्षत्रे स्याचदा खार्जूराख्यो दोषः स्यात्।यदा समे स्यात्तदा न दोष इत्यर्थः। "एकार्गलो दृष्टिपातश्चाभिजिद्रहितानि वै"इति कश्यपेनात्राभिजिद्गणना निषिद्धा केशवार्कत्रिविक्रमादिभिरंगीकृतेतिउभयवचनप्रामाण्याद्विकल्पः॥ ६२॥ अथोपग्रहदोषमुपेंद्रवज्रयाह—शराष्टेति ॥ सूर्यभतः सूर्याक्रांतनक्षत्रादब्जताराश्चंद्रनक्षत्राणि पंचाष्टदशचतुर्दशसप्तैकोनविंशतिः पंचदशाष्टादशैकविंशति- द्वाविंशतिचतुर्विंशतिपंचविंशतिसंख्याश्चेत्स्युस्तदा उपग्रहनामका दोषाः स्युः। प्रकृतिरेकविंशतिः एषां देशभेदेन परिहारमाह। शुभा नेति। कुरुदेशे

व्याघातगंडव्यतिपातपूर्वशूलांत्यवज्रे परिघातिगंडे ॥ योगे विरुद्धे त्वभिजित्समेतः खार्जूरमर्काद्विषमे शशी चेत् ॥ ६२ ॥ शराष्ट- दिक्शक्रनगातिधृत्यस्तिथिर्धृतिश्च प्रकृतेश्च पंच ॥ उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम् ॥ ६३ ॥ पातो- पग्रहलत्तासु नेष्टोंऽघ्रिःखेटपत्समः ॥ वारस्त्रिघ्नोऽष्टभिस्तष्टः सैकः स्यादर्धयामकः ॥ ६४ ॥

बाह्लिकदेशे शुभा न ॥ ६३ ॥ अथ प्रसंगात्पातोपग्रहलत्तास्वपवादमर्धयामं चानुष्टुभाह—पातेति ॥ पातश्चंडीशचंडायुधाख्यो दोषः उपग्रहाः प्रागुक्ताः लत्ता ज्ञराहुपूर्णेंदुसितेत्यादिनोक्ता। तत्र खेटपत्समः ग्रहचरणतुल्यो नक्षत्रचरणो नेष्टः। अयमर्थः। उपग्रहे पाते रविर्यस्मिन् चरणे स्यात्तत्संख्य एव तस्य चरणो वर्ज्यो नान्यः। लत्तायां तु। लत्ताकारी ग्रहो यत्र चरणे स्यात्तत्समसंख्य एव चरणो लत्तितनक्षत्रस्य वर्ज्यो नान्यः। उक्तं च। "उपग्रहेषु

१ एकार्गलाख्यो ह्यभिजित्समेतो दोषः शशी चेद्विषमर्क्षगोऽर्कादित्यपि क्वचित्पाठः।



लत्तायां तथा चंडायुधाह्वये । ग्रहोऽस्ति यत्प्रमाणांशे विद्धांशस्तत्प्रमाणकः" इति । अयं परिहारः खार्जूरिकेऽपि द्रष्टव्यः । सूर्यो यस्मिन् पादे भवेत् तत्समसंख्य एव चरण एकरेखावस्थितचंद्रनक्षत्रस्य वर्ज्य इति खार्जूरिकसमांघ्रिभमित्युक्तत्वात् । वार इति । इष्टो वारस्त्रिघ्नः अष्टभिस्तष्टः शेषितो योऽङ्कः सैकः सोऽर्धयामो दोषः स्यात् । कश्यपः । "शैलाक्षश्रुतयः ७, ५, ४, सूर्ये चंद्रे षड् वेदपर्वताः ६, ४, ७ ॥ भौमे बाणाग्निनेत्राणि ५, ३, २ सौम्ये वेदाक्षिवायवः ४, २, ५ ॥ गुरुवारेऽग्निचंद्रेभाः ३, १, ८ शुक्रे नेत्राद्रिवह्नयः २,७, ३ ॥ शनौ चंद्रेभतर्काः १,८,६ स्युः कुलिको यमघंटकः ॥ अर्धप्रहरसंज्ञांस्तान्मंगलेषु विवर्जयेत् । निधनं प्रहरार्धे तु निःसत्वं यमघंटके ॥ कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः" इति ॥ ६४ ॥ अथ कुलिकमनु

शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः ॥ रात्रौ निरेकास्तिथ्यंशाः शनौ चांऽत्योऽपि निंदिताः ॥ ६५ ॥

ष्टुभाह—शक्रेति ॥ रविमारभ्य सर्ववारेषु क्रमादुक्तसंख्यास्तिथ्यंशा मुहूर्ताः कुलिकाः स्युः । यथा दिने रवौ १४ चंद्रे १२ भौमे १० बुधे ८ गुरौ ६ शुक्रे ४ शनौ २ । रात्रावेते निरेकाः कार्याः । यथा रवौ १३ चं. ११ भौ. ९ बु. ७ गु. ५ शु. ३ श. १ शनौ तु अंत्योऽपि रात्रेः पंचदशोऽपि मुहूर्तः कुलिकः । एते निंदिताः । एतेषामर्धयामादिदोषाणां पुनर्निरूपणं विवाहे अवश्यवर्ज्यत्वार्थं शीघ्रोपस्थित्यर्थं चेति । कुलिकापवादे गुरुः । "वारेशे सबले वापि बलाढ्ये लग्नगे शुभे । कुलिकोदयदोषस्तु विनश्यति न संशयः ॥ वाराधीशे बलोपेते विधौ वा बलसंयुते । अर्धप्रहरसंभूतो दोषो नैवात्र विद्यते ॥ शुभे केंद्रगते चंद्रे शुभांशे वा शुभेक्षिते । लग्नगे सबले वापि कुलिकस्तु विलीयते ॥ अर्धप्रहरपूर्वार्धे मध्यं तु यमघंटजम् । वर्जयित्वा च कुलिकस्यांत्यांशं

शुभमाचरेत्” इति ॥ ६५ ॥ अथ दग्धतिथ्याख्यदोषमिंद्रवज्रयाह--चापांत्येति ॥ तत्तद्राशिद्वयस्थिते पतंगे सूर्ये द्वितीयाप्रमुखा उभयपक्षसाधारणाः समसंख्याकास्तिथयो दग्धाः स्युः । यथा । धनुर्मीनगते सूर्ये द्वितीया दग्धा । वृषकुंभगेऽर्के चतुर्थी । कर्कमेषगे षष्ठी । कन्यामिथुनगेऽष्टमी सिंहवृश्चिकगे दशमी । तुलामकरगेऽर्के द्वादशी दग्धेत्यर्थः । “मासदग्धाश्च तिथयो मध्यदेशे विवर्जिताः” इति परिहारः ॥ ६६ ॥ अथ जामित्रदोषं भ्रमरविलसितेनाह--लग्नादिति ॥ विवाहलग्नाच्चंद्राद्वा सप्तमभवनगते ग्रहे परिणयनं न स्यात् । अस्यापवादः । किंवेति । ग्रहाधिष्ठितनवांशमारभ्य बाणाशुग ५५

चापांत्यगे गोघटगे पतंगे कर्कोजगे स्त्रीमिथुने स्थिते च ॥ सिंहालिगे नक्रधटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ॥ ६६ ॥
लग्नाच्चंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनम् ॥ किंवा बाणाशुगमितलवगे जामित्रे स्यादशुभकरमिदम् ॥ ६७ ॥
एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः ॥ नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा ॥ ६८ ॥

मितलवगे पंचपंचाशन्मितनवांशगे चंद्रे लग्ने वा जामित्रं सूक्ष्मं स्यात् । यथा मेषे पंचमनवांशे भौमोऽस्ति तस्मात्तुलायां पंचमनवांशस्थश्चंद्रो निषिद्धोऽन्येऽष्टौ नवांशाः शुभाः । एवंविधं सूक्ष्मजामित्रमिदमशुभकरं स्यात् । अस्यापवादो व्यवहारोच्चये । स्वोच्चेऽथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा । जामित्रकादिपरिसंचितदोषराशिं हत्वा ददाति बहुशः सुखमेव चंद्रः” इति ॥ ६७ ॥ अथैकार्गलादिदोषाणामपवादभूतं साक्षाद्वसिष्ठवचनमेवेंद्रवज्रयाह--एकार्गलेति ॥ चंद्रार्कबलोपपन्ने चंद्रार्कयोः स्वोच्चमित्रादिराशिस्थिततत्वरूपेण बलेन युक्ते सति एकार्गलादयो दोषा



नश्यंति । यथार्काभ्युदये दोषा रात्रिर्नश्यति ॥ ६८ ॥ अथ केषांचिद्दोषाणां देशविशेषेण परिहारमुपजात्याह--उपग्रहर्क्षमिति ॥ स्पष्टार्थम् । अन्यच्च। "लत्ता मालवके देशे पातः कौसलके तथा। एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ युतिदोषो भवेद्गौडे जामित्रस्य च यामुने । वेधदोषस्तु विंध्याख्ये देशे नान्येषु केषु च" इति ॥ ६९ ॥ अथ दशयोगदोषमुपजात्याह--शशांकेति ॥ चेद्यदि चंद्रसूर्यनक्षत्रयोर्युतेर्योगात् भैःसप्तविंशत्या भक्तायः शेषस्तस्मिन् शून्यैकचतुःषड्दशैकादशपंचदक्षाष्टादशैकोनविंशतिविंशतिसंख्याके सति एतेऽका दशदशयोगसंज्ञा भवंति शिष्टानां दशानामंकानामभिहितत्वाद्द-

उपग्रहर्क्षे कुरुबाह्लिकेषु कलिंगवंगेषु च पातितं भम् ॥ सौराष्ट्रशाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे ॥ ६९ ॥ शशांकसूर्यर्क्षयुतेऽर्भशेषे खं भूयुगांगानि दशेशतिथ्यः ॥ नागेंदवोऽकेंदुमिता नखाश्चेद्भवंति चैते दशयोगसंज्ञाः ॥ ७० ॥ वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादाः क्षतिर्योगांके दलिते समे मनुयुतेऽथौजे तु सैकेऽर्धिते ॥ भंदास्रादथ संमितास्तु मनुभी रेखाः क्रमात्संलिखेद्वेधोऽस्मिन् ग्रहचंद्रयोर्न शुभदः स्यादेकरेखास्थयोः ॥ ७१ ॥

शयोग इत्यन्वर्था संज्ञा ॥ ७० ॥ अथ दशयोगफलं तदपवादं च शार्दूलविक्रीडितेनाह--वाताभ्रेति ॥ शून्ये शेषे वातदोषः स्यात् एकशेषेऽभ्राच्चतुःशेषेऽग्नेःषट्शेषे महीपात् दशशेषे चोरात् एकादशसु मरणम् पंचदशसु रुक् अष्टादशसु वज्रम् एकोनविंशेषु वादः कलिः झकटक इत्यर्थः । विंशतिशेषे क्षतिः द्रव्यनाशः । अथापवादः । योगांक इति । खं भूयुगादिरूपे योगांके समे युग्मसंख्याके सति दलिते अर्धीकृते मनुभिश्चतुर्दशभिर्युक्ते योऽकः स्यात् तद्दास्रादश्विनीतो भं नक्षत्रं स्यात् । अथौजे तु सैकेऽर्धिते योगांके ओजे विषमे सैके अर्धिते अश्विनीतः भं नक्षत्रं स्यात् । यथा समांकाः दश १०

अर्धिताः ५ मनु १४ युताः १९ मूलं नक्षत्रं जातम् । ओजांके यथा विषमांके १५ योगः सैकः १६ अर्धितः ८ पुष्यनक्षत्रं जातम् । अथानंतरं मुनिभिः संमिताश्चतुर्दशरेखास्तिर्यक् क्रमात्संलिखेत्ततः। अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रवृंदं अस्मिंश्चक्रे लेख्यं। तन्नक्षत्रे ग्रहाः स्थाप्याः। दिननक्षत्रे चंद्रः स्थाप्यः। तत एकरेखास्थयोः ग्रहचंद्रयोः परस्परावलोकनरूपो वेधो न शुभदः । उक्तं च ज्योतिःसागरे । "तिथ्यंगवेदैक-दिगूनविंशशून्यं भवाष्टादशविंशसंख्याः। इष्टोडुना सूर्ययुतोडुना च योगादमी चेद्दशयोगदोषाः ॥ मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः । कलिर्हा-निर्दश दोषास्त्याज्याः स्युः सर्वथा बुधैः ॥ योगांके विषमे सैके समे सवसुलोचने । दलीकृतेऽश्विनी पूर्वं दशयोगमुदाहृतम् ॥ दशयोगे महाचक्रे

लग्नेनाढ्या याततिथ्योंऽकतष्टाः शेषे नागद्व्यब्धितर्कैंदुसंख्ये ॥ रोगो वह्नी राजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः॥७२॥

प्रमादाद्यदि विध्यते। क्रूरैः सौम्यग्रहैर्वापि दंपत्योरेकनाशनम्" इति । दशयोगापवादांतरमाह भरद्वाजः । "गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेंद्रगे । दश दोषा विनश्यंति यथाग्नौ तूलराशयः॥"व्यासः । "गुरुणा भृगुणा वापि संयुतं दृष्टमेव च । दशयोगसमायुक्तमपि लग्नं शुभावहम्"॥७१॥ अथ पंचका-ख्यं बाणदोषं शालिन्याह—लग्नेनेति ॥ शुक्लपक्षादिकास्तिथयो वर्तमानलग्नेनाढ्याः युक्ताः अंकैर्नवभिस्तष्टाः शेषे नागसंख्ये अष्टसंख्ये रोगाख्यो बाणः। एवं द्विसंख्ये शेषे वह्न्याख्यः चतुःसंख्ये राजाख्यः षट्संख्ये चौराख्यः एकसंख्ये मृत्युसंज्ञो बाणः। एते बाणाः दाक्षिणात्येषु महाराष्ट्रेषु प्रसिद्धाः॥७२॥



